यो येन प्रतिबद्धः स्यात्सह तेनोदयी व्ययी ।
स विश्वस्तो नियोक्तव्यः प्राणेषु च धनेषु च ॥ १३० ॥

यतः ।

धूर्तः स्त्री वा शिशुर्यस्य मन्त्रिणः स्युर्महीपतेः ।
अनीतिपवनाक्षिप्तः कार्याब्धौ स निमज्जति ॥ १३१ ॥

शृणु देव ।

हर्षक्रोधौ समौ यस्य शास्त्रार्थे प्रत्ययस्तथा ।
नित्यंभृत्यानुपेक्षा च तस्य स्याद्धनदा धरा ॥ १३२ ॥
येषां राज्ञा सह स्यातामुच्चयापचयौ ध्रुवम् ।
अमात्या इति तान्राजा नावमन्येत्कदाचन ॥ १३३ ॥

यतः ।

महीभुजो मदान्धस्य संकीर्णस्येव दन्तिनः ।
स्खलतो हि करालम्बः सुहृत्सचिवचेष्टितम् ॥ १३४ ॥

अथागत्य प्रणम्य मेघवर्णो ब्रूते—देव दृष्टिप्रसादं कुरु । इदानीं युद्धार्थी विपक्षो दुर्गद्वारि वर्तते । तद्देवपादादेशाद्बहिर्निःसृत्य स्वविक्रमं दर्शयामि तेन देवपादानामानृण्यमुपगच्छामि । चक्रो ब्रूते—मैवम् । यदि बहिर्निःसृत्य योद्धव्यं तदा दुर्गाश्रयणमेव निष्प्रयोजनम् । अपरं च ।

विषमो हि यथा नक्रः सलिलान्निर्गतोवशः ।
वनाद्विनिर्गतः शूरः सिंहोऽपि स्याच्छृगालवत् ॥ १३५ ॥

देव स्वयं गत्वा दृश्यतां युद्धम् । यतः ।

पुरस्कृत्य बलं राजा योधयेदवलोकयन् ।
स्वामिनाधिष्ठितः श्वापि किं न सिंहायते ध्रुवम् ॥ १३६ ॥

अथ ते सर्वे दुर्गद्वारं गत्वा महाहवं कृतवन्तः । अपरेद्युश्चित्रवर्णो राजा गृध्रमुवाच—तात स्वप्रतिज्ञातमधुना निर्वाहय । गृध्रो ब्रूते—देव शृणु तावत्—

अकालसहमत्यल्पं मूर्खव्यसनिनायकम् ।
अगुप्तं भीरुयोधं च दुर्गव्यसनमुच्यते ॥ १३७ ॥

तत्तावदत्र नास्ति ।

उपजापश्चिरारोधोऽवस्कन्दस्तीव्रपौरुषम् ।
दुर्गस्य लङ्घनोपायाश्चत्वारः कथिता इमे ॥ १३८ ॥

अत्र यथाशक्ति क्रियते यत्नः । कर्णे कथयति । एवमेव । ततोऽनुदित एव भास्करे चतुर्ष्वपि दुर्गद्वारेषु प्रवृत्ते युद्धे दुर्गाभ्यन्तरगृहेष्वेकदा



२ विषमे कार्यसागरे इति वा०

काकैरग्निर्निक्षिप्तः। ततः गृहीतं गृहीतं दुर्गम् इति कोलाहलं श्रुत्वा सर्वतः प्रदीप्ताग्निमवलोक्य राजहंससैनिका दुर्गवासिनश्च सत्वरं ह्रदं प्रविष्टाः । यतः ।

सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम् ।
प्राप्तकाले यथाशक्ति कुर्यान्न तु विचारयेत् ॥ १३९ ॥

राजहंसः स्वभावान्मन्दगतिः सारसद्वितीयश्च चित्रवर्णस्य सेनापतिना कुक्कुटेनागत्य वेष्टितः । हिरण्यगर्भः सारसमाह—सारस सेनापते ममानुरोधादात्मानं कथं व्यापादयिष्यसि । त्वमधुना गन्तुं शक्तः । तत्कृत्वा जलं प्रविश्यात्मानं परिरक्ष । अस्मत्पुत्रं चूडामणिनामानं सर्वज्ञसंमत्या राजानं करिष्यसि । सारसो ब्रूते—देव न वक्तव्यमेवं दुःसहं वचः । यावच्चन्द्रार्कौ दिवि तिष्ठतस्तावद्विजयतां देवः । अहं देवदुर्गाधिकारी मन्मांसासृग्विलिप्तेन द्वारवर्त्मना प्रविशतु शत्रुः । अपरं च ।

दाता क्षमी गुणग्राही स्वामी दुःखेन लभ्यते ।
राजाह—सत्यमेवैतत् । किंतु ।
शुचिर्दक्षोऽनुरक्तश्च जाने भृत्योऽपि दुर्लभः ॥ १४० ॥

सारसो ब्रूते—शृणु देव

यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः क्रियेत ॥ १४१ ॥

अन्यच्च ।

भवेऽस्मिन्पवनोद्भ्रान्तवीचिविभ्रमभङ्गुरे ।
जायते पुण्ययोगेन परार्थे जीवितव्ययः ॥ १४२ ॥
स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् ।
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपिच, ॥ १४३ ॥

देव त्वं च स्वामी सर्वथा रक्षणीयः यतः ।

प्रकृतिः स्वामिनं त्यक्त्वा समृद्धापि न जीवति ।
अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ॥ १४४ ॥

अपरं च ।

नरेशे जीवलोकोऽयं निमीलति निमीलति ।
उदेत्युदीयमाने च रवाविव सरोरुहम् ॥ १४५ ॥

अथ कुक्कुटेनागत्य राजहंसस्य शरीरे खरतरनखाघातः कृतः । तदा सत्वरमुपसृत्य सारसेन स्वदेहान्तरितो राजा जले क्षिप्तः । अथ कुक्कुटैर्नखप्रहारजर्जरीकृतेन सारसेन कुक्कुटसेना बहुशो हता । पश्चात्सारसोऽपि

बहुभिः संभूय चञ्चुप्रहारेण विभिद्य व्यापादितः अथ चित्रवर्णो दुर्गं प्रविश्य दुर्गावस्थितं द्रव्यं ग्राहयित्वा बन्दिभिर्जयशब्दैरानन्दितः स्वस्कन्धावारं जगाम ॥

अथ राजपुत्रैरुक्तम्---तस्मिन्राजहंसबले स पुण्यवान्सारस एव येन स्वदेहत्यागेन स्वामी रक्षितः । उक्तं चैतत्---

जनयन्ति सुतान्गावः सर्वा एव गवाकृतीन् ।
विषाणोल्लिखितस्कन्धं काचिदेव गवां पतिम् ॥ १४६ ॥

विष्णुशर्मोवाच---स तावद्विद्याधरीपरिजनः स्वर्गसुखमनुभवतु महासत्त्वः । तथा चोक्तम् ।

आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः ।
भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ १४७ ॥

यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः ।
अक्षयाँल्लभते लोकान्यदि क्लैब्यं न गच्छति ॥ १४८ ॥

अपरमप्येवमस्तु ।

विग्रहः करितुरङ्गपत्तिभिर्नो कदापि भवतां महीभुजाम् ।
नीतिमन्त्रपवनैः समाहताः संश्रयन्तु गिरिगह्वरं द्विषः ॥ १४९ ॥

इति हितोपदेशे विग्रहो नाम
तृतीयः कथासंग्रहः
संपूर्णः ।

---

# संधिः ।

पुनः कथारम्भकाले राजपुत्रैरुक्तम्---आर्य विग्रहः श्रुतोऽस्माभिः संधिरधुनाभिधीयताम् । विष्णुशर्मणोक्तम्--श्रूयताम् । संधिमपि कथयामि यस्यायमाद्यः श्लोकः---

वृत्ते महति संग्रामे राज्ञोर्निहतसेनयोः ।
स्थेयाभ्यां गृध्रचक्राभ्यां वाचा संधिः कृतः क्षणात् ॥ १ ॥

राजपुत्रा ऊचुः---कथमेतत् । विष्णुशर्मा कथयति---

ततस्तेन राजहंसेनोक्तम्--केनास्मद्दुर्गे निक्षिप्तोऽग्निः । किं पारक्येण किंवास्मद्दुर्गवासिना केनापि विपक्षप्रयुक्तेन । चक्रो ब्रूते देव भवतो निष्कारणबन्धुरसौ मेघवर्णः सपरिवारो न दृश्यते । तन्मन्ये तस्यैव विचेष्टितमिदम् । राजा क्षणं विचिन्त्याह---अस्ति तावदेवं मम दुर्दैवमेतत् । तथा चोक्तम्---

अपराधः स दैवस्य न पुनर्मन्त्रिणामयम् ।
कार्यं सुचरितं क्वापि दैवयोगाद्विनश्यति ॥ २ ॥

मन्त्री ब्रूते उक्तमेवैतत् ।

विषमां हि दशां प्राप्य दैवं गर्हयते नरः ।
आत्मनः कर्मदोषांश्च नैव जानात्यपण्डितः ॥ ३ ॥

अपरं च ।

सुहृदां हितकामानां यो वाक्यं नाभिनन्दति ।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति ॥ ४ ॥

अन्यच्च ।

रक्षितव्यं सदा वाक्यं वाक्याद्भवति नाशनम् ।
हंसाभ्यां नीयमानस्य कूर्मस्य पतनं यथा ॥ ५ ॥

राजाह—कथमेतत् । मन्त्री कथयति—

## कथा प्रथमा ।

अस्ति मगधदेशे फुल्लोत्पलाभिधानं सरः । तत्र चिरं संकटविकटनामानौ हंसौ निवसतः । तयोर्मित्रं कम्बुग्रीवनामा कूर्मश्च प्रतिवसति । अथैकदा धीवरैरागत्य तत्रोक्तम्—यदत्रास्माभिरद्योषित्वा प्रातर्मत्स्यकूर्मादयो व्यापादयितव्याः । तदाकर्ण्य स कूर्मो हंसावाह—सुहृदौ श्रुतोऽयं धीवरालापः । अधुना किं मया कर्तव्यम् । हंसावाहतुः—ज्ञायताम् । पुनस्तावत्प्रातर्यदुचितं तत्कर्तव्यम् । कूर्मो ब्रूते—मामैवम् । यतो दृष्टव्यतिकरोऽहमत्र । तथा चोक्तम्—

अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।
द्वाविमौ सुखमेधेते यद्भविष्यो विनश्यति ॥ ६ ॥

तावाहतुः—कथमेतत् । कूर्मः कथयति ।

## कथा द्वितीया ।

पुरास्मिन्नेव सरस्येवंविधेषु धीवरेषूपस्थितेषु मत्स्यत्रयेणालोचितम् । तत्रानागतविधाता नामैको मत्स्यः । तेनालोचितम् अहं तावज्जलाशयान्तरं गच्छामि इत्युक्त्वा ह्रदान्तरं गतः । अपरेण प्रत्युत्पन्नमतिनाम्ना मत्स्येनाभिहितम्—भविष्यदर्थे प्रमाणाभावात्कुत्र मया गन्तव्यम् । तदुत्पन्ने यथाकार्यं तदनुष्ठेयम् । तथा चोक्तम्—

उत्पन्नामापदं यस्तु समाधत्ते स बुद्धिमान् ।
वणिजो भार्यया जारः प्रत्यक्षे निन्हुतो यथा ॥ ७ ॥

यद्भविष्यः पृच्छति—कथमेतत् । प्रत्युत्पन्नमतिः कथयति—



१ 'कार्यं सुचरितं क्वापि मन्ये विघटितं यत' इति पाठान्तरम् ।

बहुभिः संभूय चञ्चुप्रहारेण विभिद्य व्यापादितः अथ चित्रवर्णो दुर्गं प्रविश्य दुर्गावस्थितं द्रव्यं ग्राहयित्वा बन्दिभिर्जयशब्दैरानन्दितः स्वस्कन्धावारं जगाम ॥

अथ राजपुत्रैरुक्तम्—तस्मिन्राजहंसबले स पुण्यवान्सारस एव येन स्वदेहत्यागेन स्वामी रक्षितः । उक्तं चैतत्—

जनयन्ति सुतान्गावः सर्वा एव गवाकृतीन् ।
विषाणोल्लिखितस्कन्धं काचिदेव गवां पतिम् ॥ १४६ ॥

विष्णुशर्मोवाच—स तावद्विद्याधरीपरिजनः स्वर्गसुखमनुभवतु महासत्त्वः । तथा चोक्तम् ।

आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः ।
भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ १४७ ॥

यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः ।
अक्षयाँल्लभते लोकान्यदि क्लैब्यं न गच्छति ॥ १४८ ॥

अपरमप्येवमस्तु ।

विग्रहः करितुरङ्गपत्तिभिर्नो कदापि भवतां महीभुजाम् ।
नीतिमन्त्रपवनैः समाहताः संश्रयन्तु गिरिगह्वरं द्विपः ॥ १४९ ॥

इति हितोपदेशे विग्रहो नाम
तृतीयः कथासंग्रहः
संपूर्णः ।

---

# संधिः ।

पुनः कथारम्भकाले राजपुत्रैरुक्तम्—आर्य विग्रहः श्रुतोऽस्माभिः संधिरधुनाभिधीयताम् । विष्णुशर्मणोक्तम्—श्रूयताम् । संधिमपि कथयामि यस्यायमाद्यः श्लोकः—

वृत्ते महति संग्रामे राज्ञोर्निहतसेनयोः ।
स्थेयाभ्यां गृध्रचक्राभ्यां वाचा संधिः कृतः क्षणात् ॥ १ ॥

राजपुत्रा ऊचुः—कथमेतत् । विष्णुशर्मा कथयति—

ततस्तेन राजहंसेनोक्तम्—केनास्मद्दुर्गे निक्षिप्तोऽग्निः । किं पारक्येण किंवास्मद्दुर्गवासिना केनापि विपक्षप्रयुक्तेन । चक्रो ब्रूते देव भवतो निष्कारणबन्धुरसौ मेघवर्णः सपरिवारो न दृश्यते । तन्मन्ये तस्यैव विचेष्टितमिदम् । राजा क्षणं विचिन्त्याह—अस्ति तावदेवं मम दुर्दैवमेतत् । तथा चोक्तम्—

अपराधः स दैवस्य न पुनर्मन्त्रिणामयम् ।
कार्यं सुचरितं क्वापि दैवयोगाद्विनश्यति ॥ २ ॥

मन्त्री ब्रूते उक्तमेवैतत् ।

विषमां हि दशां प्राप्य दैवं गर्हयते नरः ।
आत्मनः कर्मदोषांश्च नैव जानात्यपण्डितः ॥ ३ ॥

अपरं च ।

सुहृदां हितकामानां यो वाक्यं नाभिनन्दति ।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति ॥ ४ ॥

अन्यच्च ।

रक्षितव्यं सदा वाक्यं वाक्याद्भवति नाशनम् ।
हंसाभ्यां नीयमानस्य कूर्मस्य पतनं यथा ॥ ५ ॥

राजाह–कथमेतत् । मन्त्री कथयति—

## कथा प्रथमा ।

अस्ति मगधदेशे फुल्लोत्पलाभिधानं सरः । तत्र चिरं संकटविकटनामानौ हंसौ निवसतः । तयोर्मित्रं कम्बुग्रीवनामा कूर्मश्च प्रतिवसति । अथैकदा धीवरैरागत्य तत्रोक्तम्—यदत्रास्माभिरद्योषित्वा प्रातर्मत्स्यकूर्मादयो व्यापादयितव्याः । तदाकर्ण्य स कूर्मो हंसावाह–सुहृदौ श्रुतोऽयं धीवरालापः । अधुना किं मया कर्तव्यम् । हंसावाहतुः—ज्ञायताम् । पुनस्तावत्प्रातर्यदुचितं तत्कर्तव्यम् । कूर्मो ब्रूते—मामैवम् । यतो दृष्टव्यतिकरोऽहमत्र । तथा चोक्तम्—

अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।
द्वाविमौ सुखमेधेते यद्भविष्यो विनश्यति ॥ ६ ॥

तावाहतुः–कथमेतत् । कूर्मः कथयति ।

## कथा द्वितीया ।

पुरास्मिन्नेव सरस्येवंविधेषु धीवरेषूपस्थितेषु मत्स्यत्रयेणालोचितम् । तत्रानागतविधाता नामैको मत्स्यः । तेनालोचितम् अहंतावज्जलाशयान्तरं गच्छामि इत्युक्त्वा ह्रदान्तरं गतः । अपरेण प्रत्युत्पन्नमतिनाम्ना मत्स्येनाभिहितम्—भविष्यदर्थे प्रमाणाभावात्कुत्र मया गन्तव्यम् । तदुत्पन्ने यथाकार्यं तदनुष्ठेयम् । तथा चोक्तम्—

उत्पन्नामापदं यस्तु समाधत्ते स बुद्धिमान् ।
वणिजो भार्यया जारः प्रत्यक्षे निन्हुतो यथा ॥ ७ ॥

यद्भविष्यः पृच्छति—कथमेतत् । प्रत्युत्पन्नमतिः कथयति—

१ 'कार्यं सुचरितं क्वापि मन्ये विघटितं यत' इति पाठान्तरम् ।

## कथा तृतीया ।

पुरा विक्रमपुरे समुद्रदत्तो नाम वणिगस्ति । तस्य रत्नप्रभा नाम गृहिणी स्वसेवकेन सह सदा रमते । यतः ।

न स्त्रीणामप्रियः कश्चित्प्रियो वापि न विद्यते ।
गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम् ॥ ८ ॥

अथैकदा सा रत्नप्रभा तस्य सेवकस्य मुखे चुम्बनं ददती समुद्रदत्तेनावलोकिता । ततः सा बन्धकी सत्वरं भर्तुः समीपं गत्वाह—नाथ एतस्य सेवकस्य महती निर्वृतिः । यतोऽयं चौरिकां कृत्वा कर्पूरं खादतीति मयास्य मुखमाघ्राय ज्ञातम् । तथा चोक्तम् आहारो द्विगुणः स्त्रीणाम् इत्यादि । तच्छ्रुत्वा सेवकेन प्रकुप्योक्तम्—नाथ यस्य स्वामिनो गृह एतादृशी भार्या तत्र सेवकेन कथं स्थातव्यं यत्र प्रतिक्षणं गृहिणी सेवकस्य मुखं जिघ्रति । ततोऽसावुत्थाय चलितः । साधुना यत्नात्प्रबोध्य धृतः । अतोऽहं ब्रवीमि—उत्पन्नामापदमित्यादि ॥ ततो यद्भविष्येणोक्तम्—

यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ॥ ९ ॥

ततः प्रातर्जालेन बद्धः प्रत्युत्पन्नमतिर्मृतवदात्मानं संदर्श्य स्थितः ततो जालादपसारितो यथाशक्त्युत्प्लुत्य गभीरं नीरं प्रविष्टः यद्भविष्यश्च धीवरैः प्राप्तो व्यापादितः । अतोऽहं ब्रवीमि अनागतविधाता इत्यादि ॥ तद्यथाहमन्यं ह्रदं प्राप्नोमि तथा क्रियताम् । हंसावाहतुः—जलाशयान्तरे प्राप्ते तव कुशलम् । स्थले गच्छतस्ते को विधिः । कूर्म आह—यथाहं भवद्भ्यां सहाकाशवर्त्मना यामि तथा विधीयताम् । हंसौ ब्रूतः—कथमुपायः संभवति । कच्छपो वदति—युवाभ्यां चञ्चुधृतं काष्ठखण्डमेकं मया मुखेनावलम्ब्य गन्तव्यम् । युवयोः पक्षबलेन मयापि सुखेन गन्तव्यम् । हंसौ ब्रूतः—संभवत्येष उपायः किंतु

उपायं चिन्तयन्प्राज्ञो ह्यपायमपि चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलैर्भक्षिताः प्रजाः ॥ १० ॥

कूर्मः पृच्छति—कथमेतत् तौ कथयतः—

## कथा चतुर्थी ।

अस्त्युत्तरापथे गृध्रकूटनाम्नि पर्वते महान्पिप्पलवृक्षः । तत्रानेकबका निवसन्ति । तस्य वृक्षस्याधस्ताद्विवरे सर्पो बकानां बालापत्यानि खादन्ति-

---

१ अयं श्लोकोनात्र कुत्रचित्पुस्तके पूर्वमुक्तत्वात् । २ आहार इत्यादिश्लोकः पूर्वमुक्तत्वात्पुस्तकेषु [illegible]

इति अथ शोकार्तानां बकानां विलापं श्रुत्वा केनचिद्बकेनाभिहितम्—एवं कुरुत यूयं मत्स्यानुपादाय नकुलविवरादारभ्य सर्पविवरं यावद्विक्रमेण विकिरत ततस्तदाहारलुब्धैर्नकुलैरागत्य सर्पो द्रष्टव्यः स्वभावद्वेषाद्व्यापादयितव्यश्च । तथानुष्ठिते तद्वृत्तम् । ततस्तत्र वृक्षे नकुलैर्बकशावकरावः श्रुतः । पश्चात्तैर्वृक्षमारुह्य बकशावकाः खादिताः । अत आवां ब्रूवः—उपायं चिन्तयन्नित्यादि ॥ आवाभ्यां नीयमानं त्वामवलोक्य लोकैः किंचिद्वक्तव्यमेव । तदाकर्ण्य यदि त्वमुत्तरं दास्यसि तदा त्वन्मरणम् । तत्सर्वथात्रैव स्थीयताम् । कूर्मो वदति—किमहमप्राज्ञः । नाहमुत्तरं दास्यामि । किमपि न वक्तव्यम् । तथानुष्ठिते तथाविधं कूर्ममालोक्य सर्वे गोरक्षकाः पश्चाद्धावयन्ति वदन्ति च । कश्चिद्वदति—यद्ययं कूर्मः पतति तदात्रैवपक्त्वा खादितव्यः । कश्चिद्वदति——गृहं नीत्वा भक्षणीयः इति । तद्वचनं श्रुत्वा स कूर्मः कोपाविष्टो विस्मृतपूर्वसंस्कारः प्राह—युष्माभिर्भस्म भक्षितव्यम् । इति वदन्नेव पतितस्तैर्व्यापादितश्च । अतोऽहं ब्रवीमि——सुहृदां हितकामानामित्यादि ॥ अथ प्रणिधिर्बकस्तत्रागत्योवाच——देव प्रागेव मया निगदितम् । दुर्गशोधनं हि प्रतिक्षणं कर्तव्यमिति । तच्च युष्माभिर्न कृतं तदनवधानस्य फलमनुभूतम् । दुर्गदाहो मेघवर्णेन वायसेन गृध्रप्रयुक्तेन कृतः । राजा निःश्वस्याह——

प्रणयादुपकाराद्वा यो विश्वसिति शत्रुषु ।
स सुप्त इव वृक्षाग्रात्पतितः प्रतिबुद्ध्यते ॥ ११ ॥

कूर्मः पृच्छति—कथमेतत् । तौ कथयतः——

प्राणिधिरुवाच——इतो दुर्गदाहं विधाय यदा गतो मेघवर्णस्तदा चित्रवर्णेन प्रसादितेनोक्तम्——अयं मेघवर्णोऽत्र कर्पूरद्वीपराज्येऽभिषिच्यताम् । तथा चोक्तम्——

कृतकृत्यस्य भृत्यस्य कृतं नैव प्रणाशयेत् ।
फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत् ॥ १ ॥

चक्रवाको ब्रूते—ततस्ततः । प्रणिधिरुवाच—ततः प्रधानमन्त्रिणा गृध्रेणाभिहितम्——देव नेदमुचितम् । प्रसादान्तरं किमपि क्रियताम् । यतः ।

अविचारयतो युक्तिकथनं तुषकण्डनम् ।
नीचेषूपकृतं राजन्वालुकास्विव मूत्रितम् ॥ १२ ॥

महतामास्पदे नीचः कदापि न कर्तव्यः । तथा चोक्तम्——

नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तुमिच्छति ।
मूषिको व्याघ्रतां प्राप्य मुनिं हन्तुं गतो यथा ॥ १३ ॥

चित्रवर्णः पृच्छति——कथमेतत् । मन्त्री कथयति—



१ सुद्रितमिति पा०

## कथा पञ्चमी ।

अस्ति गौतमस्य महर्षेस्तपोवने महातपा नाम मुनिः । तत्र तेन मुनिना काकेन नीयमानस्तन्मुखाद्भ्रष्टो मूषिकशावको दृष्टः । ततः स्वभावदयात्मना तेन मुनिना नीवारकणैः संवर्धितः । ततो बिडालस्तं मूषिकं खादितुमुपधावति । तमवलोक्य मूषिकस्तस्य मुनेः क्रोडे प्रविवेश । ततो मुनिनोक्तम् मूषिक त्वं मार्जारो भव । ततः स बिडालः कुक्कुरं दृष्ट्वा पलायते । ततो मुनिनोक्तम्-कुक्कुराद्बिभेषि । त्वमेव कुक्कुरो भव । स च कुक्कुरो व्याघ्राद्बिभेति । ततस्तेन मुनिना कुक्कुरो व्याघ्रः कृतः । अथ तं व्याघ्रं मुनिर्मूषिकोऽयमिति पश्यति । अथ तं मुनिं व्याघ्रं च दृष्ट्वा सर्वे वदन्ति—अनेन मुनिना मूषिको व्याघ्रतां नीतः । एतच्छ्रुत्वा स व्याघ्रोऽचिन्तयत्—यावदनेन मुनिना स्थातव्यं तावदिदं मे स्वरूपाख्यानमकीर्तिकरं न पलायिष्यते। इत्यालोच्य मूषिकस्तं मुनिं हन्तुं गतः । ततो मुनिना तज्ज्ञात्वा पुनर्मूषिको भव इत्युक्त्वा मूषिक एव कृतः । अतोऽहं ब्रवीमि—नीचः श्लाघ्यपदमित्यादि ॥ अपरं च । सुकरमिदमिति न मन्तव्यम् । शृणु ।

> भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान् ।
> अतिलोभाद्बकः पश्चान्मृतः कर्कटकग्रहात् ॥ १५ ॥

चित्रवर्णः पृच्छति—कथमेतत् । मन्त्री कथयति—

## कथा षष्ठी ।

अस्ति मालवदेशे पद्मगर्भनामधेयं सरः । तत्रैको वृद्धो बकः सामर्थ्यहीनं उद्विग्नमिवात्मनं दर्शयित्वा स्थितः । स च केनचित्कुलीरेण दृष्टः पृष्टश्च—किमिति भवानत्राहारत्यागेन तिष्ठति । बकेनोक्तम्—मत्स्या मम जीवनहेतवः । ते कैवर्तैरागत्य व्यापादयितव्या इति वार्ता नगरोपान्ते मया श्रुता । अतो वर्तनाभावादेवास्मन्मरणमुपस्थितमिति ज्ञात्वाहारेऽप्यनादरः कृतः । ततो मत्स्यैरालोचितम्—इह समये तावदुपकारक एवायं लक्ष्यते तदयमेव यथाकर्तव्यं पृच्छ्यताम् । तथा चोक्तम्—

> उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा ।
> उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥ १६ ॥

मत्स्या ऊचुः—भो बक कोऽत्र रक्षणोपायः । बको ब्रूते—अस्ति रक्षणोपायो जलाशयान्तराश्रयणम् । तत्राहमेकैकशो युष्मान्नयामि मत्स्या आहुः—एवमस्तु । ततोऽसौ बकस्तान्मत्स्यानेकैकशो नीत्वा खादति । अनन्तरं कुलीरस्तमुवाच—भो बक मामपि तत्र नय । ततो बकोऽप्यपूर्व-



१ नीयमानो मूषिकशावको दृष्ट ' इत्येवं वा पाठः

कुलीरमांसार्थी सादरं तं नीत्वा स्थले धृतवान् । कुलीरोऽपि मत्स्य कण्टकाकीर्णं तत्स्थलमालोक्याचिन्तयत्—हा हतोऽस्मि मन्दभाग्यः । भवतु । इदानीं समयोचितं व्यवहरिष्यामि यतः—

तावद्भयात्तु भेतव्यं यावद्भयमनागतम् ।
आगतं तु भयं वीक्ष्य प्रहर्तव्यमभीतवत् ॥ १७ ॥

अपरं च ।

अभियुक्तो यदा पश्येन्न किञ्चिद्धितमात्मनः ।
युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह ॥ १८ ॥

किञ्च ।

यत्रायुद्धे ध्रुवो नाशो युद्धे जीवितसंशयः ।
तं कालमेकं युद्धस्य प्रवदन्ति मनीषिणः ॥ १९ ॥

इत्यालोच्य कुलीरस्तस्य ग्रीवां चिच्छेद । सबकः पञ्चत्वं गतः । अतोऽहं ब्रवीमि-भक्षयित्वा बहून्मत्स्यान् इत्यादि ॥ ततश्चित्रवर्णोऽवदत्—शृणु तावन्मंत्रिन् मयैतदालोचितमस्ति । अत्रावस्थिते मेघवर्णेन राज्ञा यावन्ति वस्तूनि कर्पूरद्वीपस्योत्तमानि तावन्त्यस्माकमुपनेतव्यानि । तेनास्माभिर्महा-सुखेन विन्ध्याचले स्थातव्यम् । दूरदर्शी विहस्याह—देव

अनागतवतीं चिन्तां कृत्वा यस्तु प्रहृष्यति ।
स तिरस्कारमाप्नोति भग्नभाण्डो द्विजो यथा ॥ २० ॥

राजाह—कथमेतत् । मन्त्री कथयति—

## कथा सप्तमी ।

अस्ति देवीकोट्टनाम्नि नगरे देवशर्मा नाम ब्राह्मणः । तेन महाविषुवत्संक्रान्त्यां सक्तुपूर्णशराव एकः प्राप्तः । तमादायासौ कुम्भकारस्य भाण्डपूर्णमण्डपैकदेशे रौद्रेणाकुलितः सुप्तः । ततः सक्तुरक्षार्थं हस्ते दण्डमेकमादायाचिन्तयत्—यद्यहं सक्तुशरावं विक्रीय दश कपर्दकान्प्राप्स्यामि तदात्रैव तैः कपर्दकैर्घटशरावादिकमुपक्रीयानेकधा वृद्धैस्तद्धनैः पुनःपुनः पूगवस्त्रादिकमुपक्रीय विक्रीय लक्षसंख्यानि धनानि कृत्वा विवाहचतुष्टयं करिष्यामि । अनन्तरं तासु सपत्नीषु रूपयौवनवती या तस्यामधिकानुरागं करिष्यामि । सपत्न्यो यदा द्वन्द्वं करिष्यन्ति तदा कोपाकुलोऽहं ताः लगुडेन ताडयिष्यामि इत्यभिधाय लगुडः क्षिप्तः । तेन सक्तुशरावश्चूर्णितो भाण्डानि च बहूनि भग्नानि । ततस्तेन शब्देनागतेन कुम्भकारेण तथा-

१ मत्स्यकङ्कालाकीर्णम् इति वा पाठः । २ तावद्भयादिति श्लोकत्रयमेकस्मिन्पुस्तके । ३ यत्रा युद्धे इति श्लोकोऽत्र न विद्यते । ४ इयं सप्तमी कथा एकस्मिन्पुस्तके न ।

विधानि भाण्डान्यवलोक्य ब्राह्मणस्तिरस्कृतो मण्डपाद्बहिष्कृतश्च । अतोऽहं ब्रवीमि—अनागतवतीं चिन्ताम् इत्यादि ॥ ततो राजा रहसि गृध्रमुवाच—तात यथा कर्तव्यं तथोपदिश । गृध्रो ब्रूते—

मदोद्धतस्य नृपतेः सङ्कीर्णस्येव दन्तिनः ।
गच्छन्त्युन्मार्गयातस्य नेतारः खलु वाच्यताम् ॥ २१ ॥

शृणु देव किमस्माभिर्बलदर्पाद्दुर्गं भग्नम् न किंतु तव प्रतापाधिष्ठितेनोपायेन । राजाह—भवतामुपायेन । गृध्रो ब्रूते—यद्यस्मद्वचनं क्रियते तदा स्वदेशे गम्यताम् । अन्यथा वर्षाकाले प्राप्ते पुनर्विग्रहे सत्यस्माकं परभूमिष्ठानां स्वदेशगमनमपि दुर्लभं भविष्यति । सुखशोभार्थं संधाय गम्यताम् । दुर्गं भग्नं कीर्तिश्च लब्धैव । मम संमतं तावदेतत् । यतः ।

यो हि धर्मं पुरस्कृत्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह तथ्यानि तेन राजा सहायवान् ॥ २२ ॥

अन्यच्च ।

सुहृद्बलं तथा राज्यमात्मानं कीर्तिमेव च ।
युधि संदेहदोलास्थं को हि कुर्यादबालिशः ॥ २३ ॥

अपरं च ।

संधिमिच्छेत्समेनापि संदिग्धो हि जयो युधि ।
सुन्दोपसुन्दावन्योन्यं नष्टौ तुल्यबलौ न किम् ॥ २४ ॥

राजोवाच—कथमेतत् । मन्त्री कथयति—

## कथा अष्टमी ।

पुरा दैत्यौ महोदारौ सुन्दोपसुन्दनामानौ महता क्लेशेन त्रैलोक्यकामनया चिराच्चन्द्रशेखरमाराधितवन्तौ । ततस्तयोर्भगवान्परितुष्टः वरं वरयतम् इत्युवाच । अनन्तरं तयोः समाधिष्ठितया सरस्वत्या तावन्यद्वक्तुकामावन्यदभिहितवन्तौ । यद्यावयोर्भगवान्परितुष्टस्तदा स्वप्रियां पार्वतीं परमेश्वरो ददातु । अथ भगवता क्रुद्धेन वरदानस्यावश्यकतया विचारमूढयोः पार्वती प्रदत्ता । ततस्तस्या रूपलावण्यलुब्धाभ्यां जगद्धातृभ्यां मनसोत्सुकाभ्यां पापतिमिराभ्यां ममेत्यन्योन्यकलहाभ्यां प्रमाणपुरुषः कश्चित्पृच्छयतामिति मतौ कृतायां स एव भट्टारको वृद्धद्विजरूपः समागत्य तत्रोपस्थितः । अनन्तरम् आवाभ्यामियं स्वबललब्धा कस्येयमावयोर्भवति इति ब्राह्मणमपृच्छताम् । ब्राह्मणो ब्रूते—

वर्णश्रेष्ठो द्विजः पूज्यः क्षत्रियो बलवानपि ।
धनधान्याधिको वैश्यः शूद्रस्तु द्विजसेवया ॥ २५ ॥

तद्युवां क्षत्रधर्मानुगौ । युद्ध एव युवयोर्नियमः । इत्यभिहिते सति साधूक्तमनेन इति कृत्वान्योन्यतुल्यवीर्यौ समकालमन्योन्यघातेन विनाश-

मुपगतौ। अतोऽहं ब्रवीमि संधिमिच्छेत्समेनापीत्यादि ॥ राजाह—प्रागेव किं नोक्तं भवद्भिः। मन्त्री ब्रूते—मद्वचनं किमवसानपर्यन्तं श्रुतं भवद्भिः तदापि मम संमत्या नायं विग्रहारम्भः। सन्धेयगुणयुक्तोऽयं हिरण्यगर्भो न विग्राह्यः। तथा चोक्तम्—

सत्यार्यौ धार्मिकोऽनार्यो भ्रातृसंघातवान्वली।
अनेकयुद्धविजयी संधेयाः सप्त कीर्तिताः ॥ २६ ॥
सत्योऽनुपालयेत्सत्यं संधितो नैति विक्रियाम्।
प्राणबाधेऽपि सुव्यक्तमार्यो नायात्यनार्यताम् ॥ २७ ॥
धार्मिकस्याभियुक्तस्य सर्व एव हि युध्यते।
प्रजानुरागाद्धर्माच्च दुःखोच्छेद्यो हि धार्मिकः ॥ २८ ॥
संधिः कार्योऽप्यनार्येण विनाशे समुपस्थिते।
विना तस्याश्रयेणार्यः कुर्यान्न कालयापनम् ॥ २९ ॥
संहतत्वाद्यथा वेणुर्निबिडैः कण्टकैर्वृतः।
न शक्यते समुच्छेत्तुं भ्रातृसंघातवांस्तथा ॥ ३० ॥
बलिना सह योद्धव्यमिति नास्ति निदर्शनम्।
प्रतिवातं न हि घनः कदाचिदुपसर्पति ॥ ३१ ॥
जमदग्नेः सुतस्येव सर्वः सर्वत्र सर्वदा।
अनेकयुद्धजयिनः प्रतापादेव भुज्यते ॥ ३२ ॥
अनेकयुद्धविजयी संधानं यस्य गच्छति।
तत्प्रतापेन तस्याशु वशमायान्ति शत्रवः ॥ ३३ ॥

तत्र तावद्बहुभिर्गुणैरुपेतः संधेयोऽयं राजा। चक्रवाकोऽवदत्—प्रणिधे सर्वमवगतम्। व्रज पुनर्ज्ञात्वाऽऽगमिष्यसि। राजा चक्रवाकं पृष्टवान्—मंत्रिन् असंधेयाः कति। तच्छ्रोतुमिच्छामि। मन्त्री ब्रूते—देव कथयामि शृणु।

बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः।
भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा ॥ ३४ ॥
विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान्।
अनेकचित्तमन्त्रस्तु देवब्राह्मणनिन्दकः ॥ ३५ ॥
दैवोपहतकश्चैव तथा दैवपरायणः।
दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः ॥ ३६ ॥
अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च न।
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ ३७ ॥
एतैः संधिं न कुर्वीत विगृह्णीयात्तु केवलम्।
एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशम् ॥ ३८ ॥

---

१ विनातस्याश्रयेणाल्पः इति पाठान्तरम्। २ 'कुर्वाणः कालयापनम्' पाठान्तरम्।

बालस्याल्पप्रभावत्वान्न लोको योद्धुमिच्छति ।
युद्धायुद्धफलं यस्माज्ज्ञातुं शक्तो न बालिशः ॥ ३९ ॥
उत्साहशक्तिहीनत्वाद्वृद्धो दीर्घामयस्तथा ।
स्वैरेव परिभूयेते द्वावप्येतावसंशयम् ॥ ४० ॥
सुखोच्छेद्यो हि भवति सर्वज्ञातिबहिष्कृतः ।
त एवैनं विनिघ्नन्ति ज्ञातयस्त्वात्मसात्कृताः ॥ ४१ ॥
भीरुर्युद्धपरित्यागात्स्वयमेव प्रणश्यति ।
तथैव भीरुपुरुषः संग्रामे तैर्विमुच्यते ॥ ४२ ॥
लुब्धस्यासंविभागित्वान्न युध्यन्तेऽनुयायिनः ।
लुब्धानुजीविकैरेष दानभिन्नैर्निहन्यते ॥ ४३ ॥
संत्यज्यते प्रकृतिभिर्विरक्तप्रकृतिर्युधि ।
सुखाभियोज्यो भवति विषयेष्वतिसक्तिमान् ॥ ४४ ॥
अनेकचित्तमन्त्रस्तु भेद्यो भवति मन्त्रिणा ।
अनवस्थितचित्तत्वात्कार्येतः स उपेक्ष्यते ॥ ४५ ॥
सदा धर्मबलीयस्त्वाद्देवब्राह्मणनिन्दकः ।
विशीर्यते स्वयं ह्येष दैवोपहतकस्तथा ॥ ४६ ॥
संपत्तेश्च विपत्तेश्च दैवमेव हि कारणम् ।
इति दैवपरो ध्यायन्नात्मानमपि चेष्टते ॥ ४७ ॥
दुर्भिक्षव्यसनी चैव स्वयमेव विषीदति ।
बलव्यसनयुक्तस्य योद्धुं शक्तिर्न जायते ॥ ४८ ॥
अदेशस्थो हि रिपुणा स्वल्पकेनापि हन्यते ।
ग्राहोऽल्पीयानपि जले गजेन्द्रमपि कर्षति ॥ ४९ ॥
बहुशत्रुस्तु संत्रस्तः श्येनमध्ये कपोतवत् ।
येनैव गच्छति पथा तेनैवाशु विपद्यते ॥ ५० ॥
अकालसैन्ययुक्तस्तु हन्यते कालयोधिना ।
कौशिकेन हतज्योतिर्निशीथ इव वायसः ॥ ५१ ॥
सत्यधर्मव्यपेतेन संदध्यान्न कदाचन ।
स संधितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ ५२ ॥

अपरमपि कथयामि संधिविग्रहयानासनसंश्रयद्वैधीभावाः षाड्गुण्यम् । कर्मणामारम्भोपायः पुरुषद्रव्यसंपद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्च पञ्चाङ्गो मन्त्रः । सामदानभेददण्डाश्चत्वार उपायाः । उत्साहशक्तिर्मन्त्रशक्तिः प्रभुशक्तिश्चेति शक्तित्रयम् । एतत्सर्वमालोच्य नित्यं विजिगीषवो भवन्ति महान्तः ।

या हि प्राणपरित्यागमूल्येनापि न लभ्यते ।
सा श्रीर्नीतिविदं पश्य चञ्चलापि प्रधावति ॥ ५३ ॥

१ द्व्या भवति मन्त्रिणाम् इति पाठान्तरम् । २ स्वयमेवावसीदति इ० पा०

तथा चोक्तम्—

विज्ञं यदा यस्य समं विभक्तं गूढश्चरैः संनिभृतश्च मन्त्रः ।
न चाप्रियं प्राणिषु यो ब्रवीति स सागरान्तां पृथिवीं प्रशास्ति ५४

किंतु यद्यपि महामन्त्रिणा गृध्रेण संधानमुपन्यस्तं तथापि तेन राज्ञा संप्रति भूतजयदर्पान्न मन्तव्यम् । देव तदेव क्रियताम् । सिंहलद्वीपस्य महाबलो नाम सारसो राजास्मन्मित्रं जम्बुद्वीपे कोपं जनयतु । यतः ।

सुगुप्तिमाधाय सुसंहतेन बलेन वीरो विचरन्नरातिम् ।
संतापयेद्येन समं सुतप्तस्तप्तेन संधानमुपैति तप्तः ॥ ५५ ॥

राज्ञा एवमस्तु इति निगद्य विचित्रनामा बकः सुगुप्तलेखं दत्वा सिंहलद्वीपं प्रहितः ।

अथ प्रणिधिरागत्योवाच—देव श्रूयतां तत्रत्यप्रस्तावः । एवं तत्र गृध्रेणोक्तम्—देव यन्मेघवर्णस्तत्र चिरमुषितः स वेत्ति किं संधेयगुणयुक्तो हिरण्यगर्भो न वा इति । ततोऽसौ राज्ञा समाहूय पृष्टः—वायस कीदृशोऽसौ हिरण्यगर्भः । चक्रवाको मन्त्री वा कीदृशः । वायस उवाच—देव हिरण्यगर्भो राजा युधिष्ठिरसमो महाशयः । चक्रवाकसमो मन्त्री न क्वाप्यवलोक्यते । राजाह—यद्येवं तदा कथमसौ त्वया वञ्चितः । विहस्य मेघवर्णः प्राह—देव ।

विश्वासप्रतिपन्नानां वञ्चने काविदग्धता ।
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम् ॥ ५६ ॥

शृणु देव तेन मन्त्रिणाहं प्रथमदर्शन एव ज्ञातः । किंतु महाशयोऽसौ राजा । तेन मया विप्रलब्धः ॥ तथा चोक्तम्—

आत्मौपम्येन यो वेत्ति दुर्जनं सत्यवादिनम् ।
स तथा वञ्च्यते धूर्तैर्ब्राह्मणश्छागतो यथा ॥ ५७ ॥

राजोवाच कथमेतत् । मेघवर्णः कथयति—

## कथा नवमी ।

अस्ति गौतमस्यारण्ये प्रस्तुतयज्ञः कश्चिद्ब्राह्मणः । स च यज्ञार्थं ग्रामान्तराच्छागमुपक्रीय स्कन्धे नीत्वा गच्छन्धूर्तत्रयेणावलोकितः । ततस्ते धूर्ता यद्येष च्छागः केनाप्युपायेन लभ्यते तदा मतिप्रकर्षो भवतीति समालोच्य वृक्षत्रयतले क्रोशान्तरेण तस्य ब्राह्मणस्यागमनं प्रवीक्ष्य पथि स्थिताः। तत्रैकेन धूर्तेन गच्छन्स ब्राह्मणोऽभिहितः—भो ब्राह्मण किमिति कुकुरः स्कन्धेनोह्यते । विप्रेणोक्तम्—नायं श्वा किंतु यज्ञच्छागः अथानन्तरस्थितेनान्येन धूर्तेन तथैवोक्तम्। तदाकर्ण्य ब्राह्मणश्छागं भूमौ निधाय मुहुर्निरीक्ष्य पुनः स्कन्धे कृत्वा दोलायमानमतिश्चलितः । यतः ।

२ गूढश्चचारो इ० पा० । १ प्रबलकोपं जनयतु इति पाठान्तरम् ।

मतिर्दोलायते सत्यं सतामपि खलोक्तिभिः ।
ताभिर्विश्वासितश्चासौ म्रियते चित्रकर्णवत् ॥ ५८ ॥

राजह–कथमेतत् । स कथयति—

## कथा दशमी।

अस्ति कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः । तस्य सेवकास्त्रयः काको व्याघ्रो जम्बुकश्च । अथ तैर्भ्रमद्भिः सार्थाद्भ्रष्टः कश्चिदुष्ट्रो दृष्टः पृष्टश्च–कुतो भवानागतः स चात्मवृत्तान्तमकथयत् । ततस्तैर्नीत्वा सिंहेऽसौ समर्पितः । तेनाभयवाचं दत्त्वा चित्रवर्ण इति नाम कृत्वा स्थापितः । अथ कदाचित्सिंहस्य शरीर वैकल्याद्भूरिवृष्टिकारणाच्चाहारमलभमानास्ते व्यग्रा बभूवुः । ततस्तैरालोचितम्–चित्रवर्णमेव यथा स्वामी व्यापादयति तथानुष्ठीयताम् । किमनेन कण्टकभुजा । व्याघ्र उवाच–स्वामिनाभयवाचं दत्त्वानुगृहीतस्तत्कथमेवं संभवति । काको ब्रूते—इह समये परिक्षीणः स्वामी पापमपि करिष्यति यतः ।

त्यजेत्क्षुधार्ता महिला स्वपुत्रं खादेत्क्षुधार्ता भुजगी स्वमण्डम् ।
बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति ॥५९॥

अन्यच्च ।

मत्तः प्रमत्तश्चोन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ।
लुब्धो भीरुस्त्वरायुक्तः कामुकश्च न धर्मवित् ॥ ६० ॥

इति संचिन्त्य सर्वे सिंहान्तिकं जग्मुः । सिंहेनोक्तम्—आहारार्थं किंचित्प्राप्तम् । तैरुक्तम् देव यत्नादपि न प्राप्तं किंचित् । सिंहेनोक्तम्–कोऽधुना जीवनोपायः । काको वदति–देवस्वाधीनाहारपरित्यागात्सर्वनाशोऽयमुपस्थितः । सिंहेनोक्तम् अत्राहारः कः स्वाधीनः । काकः कर्णे कथयति–चित्रकर्ण इति । सिंहो भूमिं स्पृष्ट्वा कर्णौ स्पृशति । अभयवाचं दत्त्वा धृतोऽयमस्माभिः । तत्कथमेवं संभवति । तथा च ।

न भूप्रदानं न सुवर्णदानं न गोप्रदानं न तथान्नदानम् ।
यथा वदन्तीह महाप्रदानं सर्वेषु दानेष्वभयप्रदानम् ॥ ६० ॥

अन्यच्च ।

सर्वकामसमृद्धस्य अश्वमेधस्य यत्फलम् ।
तत्फलं लभते सम्यग्रक्षिते शरणागते ॥ ६१ ॥

काको ब्रूते—नासौ स्वामिना व्यापादयितव्यः । किंत्वस्माभिरेव तथा कर्तव्यं यथासौ स्वदेहदानमङ्गीकरोति । सिंहस्तच्छ्रुत्वा तूष्णीं स्थितः ततोऽसौ लब्धावकाशः कूटं कृत्वा सर्वानादाय सिंहान्तिकं गतः । अथ काकेनोक्तम्—देव यत्नादप्याहारो न प्राप्तः । अनेकोपवासखिन्नः स्वामी । तदिदानीं मदीयमांसमुपभुज्यताम् यतः

स्वामिमूला भवन्त्येव सर्वाः प्रकृतयः खलु ।
समूलेष्वपि वृक्षेषु प्रयत्नः सफलो नृणाम् ॥ ६२ ॥

सिंहेनोक्तम्—वरं प्राणपरित्यागो न पुनरीदृशि कर्मणि प्रवृत्तिः । जम्बूकेनापि तथोक्तम् । ततः सिंहेनोक्तम्—मैवम् । अथ व्याघ्रेणोक्तम्—मद्देहेन जीवतु स्वामी । सिंहेनोक्तम्—न कदाचिदेवमुचितम् । अथ चित्रकर्णोऽपि जातविश्वासस्तथैवात्मदानमाह । ततस्तद्वचनात्तेन व्याघ्रेणासौ कुक्षिं विदार्य व्यापादितः सर्वैर्भक्षितः अतोऽहं ब्रवीमि—मतिर्दोलायते सत्यमित्यादि ॥ ततस्तृतीयधूर्तवचनं श्रुत्वा स्वमतिभ्रमं निश्चित्य छागं त्यक्त्वा ब्राह्मणः स्नात्वा गृहं ययौ । सछागस्तैर्धूर्तैर्नीत्वा भक्षितः । अतोऽहं ब्रवीमि—आत्मौपम्येन यो वेत्ति इत्यादि ॥ राजाह—मेघवर्ण कथं शत्रुमध्ये त्वया चिरमुषितम् । कथं वा तेषामनुनयः कृतः मेघवर्ण उवाच—देव स्वामिकार्यार्थिना स्वप्रयोजनवशाद्वा किं न क्रियते पश्य

लोको वहति किं राजन्न मूर्ध्नां दग्धुमिन्धनम् ।
क्षालयन्नपि वृक्षाङ्घ्रिं नदीवेला निकृन्तति ॥ ६३ ॥

तथा चोक्तम्—

स्कन्धेनापि वहेच्छत्रून्कार्यमासाद्य बुद्धिमान् ।
यथा वृद्धेन सर्पेण मण्डूका विनिपातिताः ॥ ६४ ॥

राजाह—कथमेतत् । मेघवर्णः कथयति—

## कथा एकादशी ।

अस्ति जीर्णोद्याने मन्दविषो नाम सर्पः । सोऽतिजीर्णतयाहारमप्यन्वेष्टुमक्षमः सरस्तीरे पतित्वा स्थितः । ततोदूरादेव केनचिन्मण्डूकेन दृष्टः पृष्टश्च—किमिति त्वमाहारं नान्विष्यसि । सर्पोऽवदत्—गच्छ भद्र मम मन्दभाग्यस्य प्रश्नेन किम् । ततः संजातकौतुकः स च भेकः सर्वथा कथ्यतामित्याह । सर्पोऽप्याह—भद्र ब्रह्मपुरवासिनः श्रोत्रियस्य कौण्डिन्यस्य पुत्रो विंशतिवर्षीयः सर्वगुणसंपन्नो दुर्दैवान्मम नृशंसस्वभावाद्दष्टः । तं पुत्रं सुशीलनामानं मृतमालोक्य मूर्छितः कौण्डिन्यः पृथिव्यां लुलोठ । अनन्तरं ब्रह्मपुरवासिनः सर्वे बान्धवास्तत्रागत्योपविष्टाः । तथा चोक्तम्—

उत्सवे व्यसने युद्धे दुर्भिक्षे राष्ट्रविप्लवे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ६५ ॥

तत्र कपिलो नाम स्नातकोऽवदत् अरे कौण्डिन्य मूढोऽसि तेनैव विलपसि । शृणु ।

क्रोडीकरोति प्रथमं यथा जातमनित्यता ।
धात्रीव जननी पश्चात्तथा शोकस्य कः क्रमः ॥ ६६ ॥

---

१ समूलेषु हि इति पाठान्तरम् । २ मंदविषोनाम इति पाठान्तरम् ।

क्व गताः पृथिवीपालाः ससैन्यबलवाहनाः ।
वियोगसाक्षिणी येषां भूमिरद्यापि तिष्ठति ॥ ६७ ॥

अपरं च ।

कायः संनिहितापायः संपदः पदमापदाम् ।
समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ ६८ ॥
प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते ।
आमकुम्भ इवाम्भःस्थो विशीर्णः सन्विभाव्यते ॥ ६९ ॥
आसन्नतरतामेति मृत्युर्जंतोर्दिने दिने ।
आघातं नीयमानस्य बध्यस्येव पदे पदे ॥ ७० ॥
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
ऐश्वर्यं प्रियसंवासो मुह्येत्तत्र न पण्डितः ॥ ७१ ॥
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ७२ ॥
यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति ।
विश्रम्य च पुनर्गच्छेत्तद्वद्भूतसमागमः ॥ ७३ ॥

अन्यच्च ।

पञ्चभिर्निर्मिते देहे पञ्चत्वं च पुनर्गते ।
स्वां स्वां योनिमनुप्राप्ते तत्र का परिदेवना ॥ ७४ ॥
यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् ।
तावन्तोऽपि निखन्यन्ते हृदये शोकशङ्कवः ॥ ७५ ॥
नायमत्यन्तसंवासो लभ्यते येन केनचित् ।
अपि स्वेन शरीरेण किमुतान्येन केनचित् ॥ ७६ ॥

अपि च ।

संयोगो हि वियोगस्य संसूचयति संभवम् ।
अनतिक्रमणीयस्य जन्म मृत्योरिवागमम् ॥ ७७ ॥
आपातरमणीयानां संयोगानां प्रियैः सह ।
अपथ्यानामिवान्नानां परिणामोऽतिदारुणः ॥ ७८ ॥

अपरं च ।

व्रजन्ति न निवर्तन्ते स्रोतांसि सरितां यथा ।
आयुरादाय मर्त्यानां तथा रात्र्यहनी सदा ॥ ७९ ॥
सुखास्वादपरो यस्तु संसारे सत्समागमः ।
स वियोगावसानत्वाद्दुःखानां धुरि युज्यते ॥ ८० ॥
अत एव हि नेच्छन्ति साधवः सत्समागमम् ।
यद्वियोगासिलूनस्य मनसो नास्ति भेषजम् ॥ ८१ ॥
सुकृतान्यपि कर्माणि राजभिः सगरादिभिः ।

अथ तान्येव कर्माणि ते चापि प्रलयं गताः ॥ ८२ ॥

संचिन्त्य संचिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य ।
वर्षाम्बुसिक्ता इव चर्मबन्धाः सर्वेप्रयत्नाः शिथिलीभवन्ति ॥८३॥
यामेव रात्रिं प्रथमामुपैति गर्भे निवासी नरवीरलोकः ।
ततः प्रभृत्यस्खलितप्रयाणः स प्रत्यहं मृत्युसमीपमेति ॥ ८४ ॥

अतः संसारं विचारय । शोकोऽयमज्ञानस्य प्रपञ्चः । पश्य ।

अज्ञानं कारणं न स्याद्वियोगो यदि कारणम् ।
शोको दिनेषु गच्छत्सु वर्धतामपयाति किम् ॥ ८५ ॥

तदत्रात्मानमनुसंधेहि । शोकचर्चां च परिहर । यतः ।

अकाण्डपातजातानां गात्राणां मर्मभेदिनाम् ।
गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥ ८६ ॥

ततस्तद्वचनं निशम्य प्रबुद्ध इव कौण्डिन्य उत्थायाब्रवीत्—तदलमिदानीं गृहनरकवासेन । वनमेव गच्छामि । कपिलः पुनराह—

वनेपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते
निवृत्तरागस्य गृहं तपोवनम् ॥८७॥

यतः ।

दुःखितोऽपि चरेद्धर्मं यत्र कुत्राश्रमे रतः ।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ॥ ८८ ॥

उक्तं च ।

वृत्त्यर्थं भोजनं येषां संतानार्थं च मैथुनम् ।
वाक्सत्यवचनार्थाय दुर्गाण्यपि तरन्ति ते ॥ ८९ ॥

तथा हि ।

आत्मा नदी संयमपुण्यतीर्था सत्योदका शीलतटा दयोर्मिः ।
तत्राभिषेकं कुरु पाण्डुपुत्र न वारिणा शुध्यति चान्तरात्मा ॥९०॥

विशेषतश्च ।

जन्ममृत्युजराव्याधिवेदनाभिरुपद्रुतम् ।
संसारमिममुत्पन्नमसारं त्यजतः सुखम् ॥ ९१ ॥

यतः ।

दुःखमेवास्ति न सुखं यस्मात्तदुपलक्ष्यते ।
दुःखार्तस्य प्रतीकारे सुखसंज्ञा विधीयते ॥ ९२ ॥

कौण्डिन्यो ब्रूते—एवमेव । ततोऽहं तेन शोकाकुलेन ब्राह्मणेन शप्तः—यदद्यारभ्य मण्डूकानां वाहनं भविष्यसि इति । कपिलो ब्रूते—संप्रत्युपदेशासहिष्णुर्भवान् । शोकाविष्टं ते हृदयम् । तथाहि कार्यं शृणु ।

सङ्गः सर्वात्मना त्याज्यः स चेत्यक्तुं न शक्यते ।
स सद्भिः सह कर्तव्यः सतां सङ्गो हि भेषजम् ॥ ९३ ॥



अन्यच्च ।

कामः सर्वात्मना हेयः स चेद्धातुं न शक्यते ।
स्वां भार्यां प्रति कर्तव्यः सैव तस्य हि भेषजम् ॥ ९४ ॥

एतच्छ्रुत्वा स कौण्डिन्यः कपिलोपदेशामृतप्रशान्तशोकानलो यथाविधि दण्डग्रहणं कृतवान् । अतो ब्राह्मणशापान्मण्डूकान्वोढुमत्र तिष्ठामि । अनन्तरं तेन मण्डूकेन गत्वा मण्डूकनाथस्य जालपादनाम्नोऽग्रे तत्कथितम् । ततोऽसावागत्य मण्डूकनाथस्तस्य सर्पस्य पृष्ठमारूढवान् । स च सर्पस्तं पृष्ठे कृत्वा चित्रपदक्रमं बभ्राम । परेद्युश्चलितुमसमर्थं तं मण्डूकनाथोऽवदत्—किमद्य भवान्मन्दगतिः । सर्पो ब्रूते—देव आहारविरहादसमर्थोऽस्मि । मण्डूकनाथोऽवदत्—अस्मदाज्ञया मण्डूकान्भक्षय ॥ ततः गृहीतोऽयं महाप्रसाद इत्युक्त्वा क्रमशो मण्डूकान्खादितवान् । अतो निर्मण्डूकं सरो विलोक्य मण्डूकनाथोऽपि तेन खादितः । अतोऽहं ब्रवीमि—स्कन्धेनापि वहेच्छत्रूनित्यादि ॥ देव यात्विदानीं पुरावृत्ताख्यानकथनम् । सर्वथा सन्धेयोऽयं हिरण्यगर्भो राजा संधीयतामिति मे मतिः । राजोवाच—कोऽयं भवतो विचारः यतो जितस्तावदयमस्माभिस्ततो यद्यस्मत्सेवया वसति तदास्ताम् । नो चेद्विगृह्यताम् ॥

अत्रान्तरे जम्बुद्वीपादागत्य शुकेनोक्तम्—देव सिंहलद्वीपस्य सारसो राजा संप्रति जम्बुद्वीपमाक्रम्यावतिष्ठते । राजा ससंभ्रमं ब्रूते—किं किम् । शुकः पूर्वोक्तं कथयति । गृध्रः स्वगतमुवाच । साधु रे चक्रवाक मन्त्रिन् सर्वज्ञ साधु साधु । राजा सकोपमाह—आस्तां तावदयम् । गत्वा तमेव समूलमुन्मूलयामि । दूरदर्शी विहस्याह—

न शरन्मेघवत्कार्यं वृथैव घनगर्जितम् ।
परस्यार्थमनर्थं वा प्रकाशयति नो महान् ॥ ९५ ॥

अपरं च ।

एकदा न विगृह्णीयाद्बहून्राजाभिघातिनः ।
सदर्पोऽप्युरगः कीटैर्बहुभिर्नाश्यते ध्रुवम् ॥ ९६ ॥

देव किमितो विना संधानं गमनमस्ति । यतस्तदास्मत्पश्चात्प्रकोपोऽनेन कर्तव्यः । अपरं च ।

योऽर्थतत्त्वमविज्ञाय क्रोधस्यैव वशं गतः ।
स तथा तप्यते मूढो ब्राह्मणो नकुलाद्यथा ॥ ९७ ॥

राजाह—कथमेतत् । दूरदर्शी कथयति—

## कथा द्वादशी ।

अस्त्युज्जयिन्यां माधवो नाम विप्रः । तस्य ब्राह्मणी प्रसूता बालापत्यस्य रक्षार्थं ब्राह्मणमवस्थाप्य स्नातुं गता । अथ ब्राह्मणाय राज्ञः पार्वणश्राद्धं दातुमाह्वानमागतम् । तद्दृष्ट्वा ब्राह्मणः सहजदारिद्र्यादचिन्तयत्—यदि सत्वरं न गच्छामि तदान्यः कश्चिच्छ्रुत्वा श्राद्धं ग्रहीष्यति । यतः ।

आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ ९८ ॥

किंतु बालस्यात्र रक्षको नास्ति । तत्किं करोमि । यातु चिरकालपालितमिमं नकुलं पुत्रनिर्विशेषं बालकरक्षायां व्यवस्थाप्य गच्छामि । तथा कृत्वा गतः । ततस्तेन नकुलेन बालकसमीपमागच्छन्कृष्णसर्पो दृष्ट्वा व्यापाद्य कोपात्खण्डं खण्डं कृत्वा खादितः । ततोऽसौ नकुलो ब्राह्मणमायान्तमवलोक्य रक्तविलिप्तमुखपादः सत्वरमुपागम्य तच्चरणयोर्लुलोठ । ततः स विप्रस्तथाविधं तं दृष्ट्वा बालकोऽनेन खादित इत्यवधार्य नकुलं व्यापादितवान् । अनन्तरं यावदुपसृत्यापत्यं पश्यति ब्राह्मणस्तावद्बालकः सुस्थः सर्पश्च व्यापादितस्तिष्ठति ततस्तमुपकारकं नकुलं निरीक्ष्य भावितचेताः स परं विषादमगमत् । अतोऽहं ब्रवीमि—योऽर्थतत्त्वमविज्ञायेत्यादि ॥ अपरं च ।

कामः क्रोधस्तथा मोहो लोभो मानो मदस्तथा ।
षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी नृपः ॥ ९९ ॥

राजाह—मन्त्रिन् एष ते निश्चयः । मन्त्री ब्रूते—एवमेव । यतः ।

स्मृतिश्च परमार्थेषु वितर्को ज्ञाननिश्चयः ।
दृढता मन्त्रगुप्तिश्च मन्त्रिणः परमा गुणाः ॥ १०० ॥

तथा च ।

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥ १०१ ॥

तद्देव यदिदानीमस्मद्वचनं क्रियते तदा संधाय गम्यताम् । यतः—

यद्यप्युपायाश्चत्वारो निर्दिष्टाः साध्यसाधने ।
संख्यामात्रं फलं तेषां सिद्धिः साम्नि व्यवस्थिता ॥ १०२ ॥

राजाह—कथमेवं संभवति । मन्त्री ब्रूते—देव सत्वरं[1] भविष्यति यतः ।

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रंजयति ॥ १०३ ॥

विशेषतश्चायं धर्मज्ञो राजा सर्वज्ञो मन्त्री च । ज्ञातमेतन्मया पूर्वं मेघवर्णवचनात्तत्कृतकार्यसंदर्शनाच्च । यतः ।

कर्मानुमेयाः सर्वत्र परोक्षगुणवृत्तयः ।
तस्मात्परोक्षवृत्तीनां फलैः कर्मानुभाव्यते ॥ १०४ ॥

राजाह—अलमुत्तरोत्तरेण । यथाभिप्रेतमनुष्ठीयताम् । एतन्मन्त्रयित्वा गृध्रो महामन्त्री दुर्गाभ्यन्तरं चलितः । तत्र यथार्हं कर्तव्यम् इत्युक्त्वा प्रणिधिः प्रयातः । ततः प्रणिधिबकेनागत्य राज्ञो हिरण्यगर्भस्य निवेदितम्—देव संधिं कर्तुं महामन्त्री गृध्रोऽस्मत्समीपमागच्छत् । राजहंसो ब्रूते—मन्त्रिन् पुनः संबन्धिना केनचिदत्रागन्तव्यम् । सर्वज्ञो विहस्याह—देव न शङ्कास्पदमेतत् यतोऽसौ महाशयो दूरदर्शी । अथवा स्थितिरियं मन्दमतीनाम् । कदाचिच्छङ्कैव न क्रियते । कदाचित्सर्वत्र शङ्का । तथा हि ।

---

१ सत्वरः स भवतीति पाठान्तरम् । २ अत्रश्लोकाधिक्यम् ' मृद्घटवत्सुखभेद्यो दुःसंधानश्च दुर्जनो भवति । सुजनश्च कनकघटवद्दुर्भेदश्चाशु संधेयः' इति । ३ कर्म विभाव्यते इति पाठान्तरम् ।

सरसि बहुशस्ताराच्छाये क्षणात्परिवञ्चितः
कुमुदविटपान्वेषी हंसो निशास्वविचक्षणः ।
न दशति पुनस्ताराशङ्की दिवापि सितोत्पलं
कुहकचकितो लोकः सत्येप्यपायमपेक्षते ॥ १०५ ॥
'दुर्जनदूषितमनसः सुजनेष्वपि नास्ति विश्वासः ।
बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयति' ॥ १०६ ॥

तदेव यथाशक्ति तत्पूजार्थं रत्नोपहारादिसामग्री सुसज्जीक्रियताम् । तथानुष्ठिते सति स गृध्रो मन्त्री दुर्गद्वाराच्चक्रवाकेणोपगम्य सत्कृत्यानीय राजदर्शनं कारितो दत्तासने चोपविष्टः । चक्रवाक उवाच—युष्मदायत्तं सर्वम् । स्वेच्छयोपभुज्यतामिदं राज्यम् । राजहंसो ब्रूते—एवमेव । दूरदर्शी कथयति—एवमेवैतत् । किंत्विदानीं बहुप्रपंचवचनं निष्प्रयोजनम् । यतः—

लुब्धमर्थेन गृह्णीयात्स्तब्धमञ्जलिकर्मणा ।
मूर्खं छन्दानुरोधेन याथातथ्येन पण्डितम् ॥ १०७ ॥

अन्यच्च ।

सद्भावेन हरेन्मित्रं संभ्रमेण तु बान्धवान् ।
स्त्रीभृत्यौ दानमानाभ्यां दाक्षिण्येनेतराञ्जनान् ॥ १०८ ॥

तदिदानीं संधाय गम्यताम् । महाप्रतापश्चित्रवर्णो राजा । चक्रवाको ब्रूते—यथा संधानं कार्यं तदप्युच्यताम् । राजहंसो ब्रूते—कति प्रकाराः संधीनां संभवन्ति । गृध्रो ब्रूते—कथयामि । श्रूयताम् ।

बलीयसाभियुक्तस्तु नृपो नान्यप्रतिक्रियः ।
आपन्नः सन्धिमन्विच्छेत्कुर्वाणः कालयापनम् ॥ १०९ ॥
कपाल उपहारश्च संतानः संगतस्तथा ।
उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ॥ ११० ॥
अदृष्टनर आदिष्ट आत्मादिष्ट उपग्रहः ।
परिक्रयस्तथोच्छन्नस्तथा च परभूषणः ॥ १११ ॥
स्कन्धोपनेयः सन्धिश्च षोडशैते प्रकीर्तिताः ।
इति षोडशकं प्राहुः संधिं सन्धिविचक्षणाः ॥ ११२ ॥
कपालसन्धिर्विज्ञेयः केवलं समसन्धितः ।
संप्रदानाद्भवति य उपहारः स उच्यते ॥ ११३ ॥
संतानसंधिर्विज्ञेयो दारिकादानपूर्वकः ।
सद्भिस्तु संगतः संधिर्मैत्रीपूर्व उदाहृतः ॥ ११४ ॥
यावदायुःप्रमाणस्तु समानार्थप्रयोजनः ।
संपत्तौ वा विपत्तौ वा कारणैर्यो न भिद्यते ॥ ११५ ॥
संगतः संधिरेवायं प्रकृष्टत्वात्सुवर्णवत् ।
तथान्यैः संधिकुशलैरुपन्यास उदाहृतः ॥ ११६ ॥
आत्मकार्यस्य[3] सिद्धिं तु समुद्दिश्य क्रियेत यः ।
स उपन्यासकुशलैरुपन्यास उदाहृतः ॥ ११७ ॥

---

१ न पठितोऽयमर्धश्लोकः । २ 'सद्भिः संगतसंधिस्तु' इति पाठान्तरं सम्यक् । ३ अन्यानेकार्यसिद्धिं तु इति वा पाठः ।

मयास्योपकृतं पूर्वं ममाप्ययेष करिष्यति ।
इति यः क्रियते सन्धिः प्रतीकारः स उच्यते ॥ ११८ ॥

उपकारं करोम्यस्य ममाप्येष करिष्यति ।
अयं चापि प्रतीकारो रामसुग्रीवयोरिव ॥ ११९ ॥

एकार्थां सम्यगुद्दिश्य क्रियां यत्र हि गच्छति ।
सुसंहितप्रमाणस्तु स च संयोग उच्यते ॥ १२० ॥

आवयोर्योधमुख्यैस्तु मदर्थः साध्यतामिति ।
यस्मिन्पणस्तु क्रियते स संधिः पुरुषान्तरः ॥ २१ ॥

त्वयैकेन मदीयोऽर्थः संप्रसाध्यस्त्वसाविति ।
यत्र शत्रुः पणं कुर्यात्सोऽदृष्टपुरुषः स्मृतः ॥ २२ ॥

यत्र भूम्येकदेशेन पणेन रिपुरूर्जितः ।
संधीयते संधिविद्भिः स चादिष्ट उदाहृतः ॥ २३ ॥

स्वसैन्येन तु संधानमात्मादिष्ट उदाहृतः
क्रियते प्राणरक्षार्थं सर्वदानादुपग्रहः ॥ २४ ॥

कोशांशेनार्धकोशेन सर्वकोशेन वा पुनः ।[1]
शिष्टस्य प्रतिरक्षार्थं परिक्रय उदाहृतः ॥ २५ ॥

भुवां सारवतीनां तु दानादुच्छिन्न उच्यते ।
भूम्युत्थफलदानेन सर्वेण परभूषणः ॥ २६ ॥

परिच्छिन्नं फलं यत्र प्रतिस्कन्धेन दीयते ।
स्कन्धोपनेयं तं प्राहुः सन्धिं सन्धिविचक्षणाः ॥ २७ ॥

परस्परोपकारस्तु मैत्री संबन्धकस्तथा ।[2]
उपहारश्च विज्ञेयाश्चत्वारश्चैव संधयः ॥ २८ ॥

एक एवोपहारस्तु संधिरेव मतो मम ।
उपहारविभेदास्तु सर्वे मैत्रविवर्जिताः ॥ २९ ॥

अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्तते ।
उपहारादृते तस्मात्संधिरन्यो न विद्यते ॥ १३० ॥

राजाह—

अयं निजः परो वेति गणना लघुचेतसाम् ।[3]
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ३१ ॥

अपरं च ।

मातृवत्परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत्सर्वभूतेषु यः पश्यति स पण्डितः ॥ ३२ ॥

भवन्तो महान्तः पण्डिताश्च । तदत्रास्माकं यथाकार्यमुपदिश्यताम् ।
मन्त्री ब्रूते—आः किमेवमुच्यते ।

आधिव्याधिपरीतापादद्य श्वो वा विनाशिने ।
को हि नाम शरीराय धर्मापेतं समाचरेत् ॥ ३३ ॥

---

१ केनाङ्गेनापि कुप्येन सर्वकुप्येन वा पुनः। शेषस्यपरि०, इतिपाठान्तरम् ।
२ मैत्रसम्बन्धकः इतिपाठोऽन्यत्र । ३ अयमित्यादिपद्यद्वयं कुत्रचित्पुस्तके न विद्यते ।

जलान्तश्चन्द्रचपलं जीवितं खलु देहिनाम् ।
तथाविधमिति ज्ञात्वा शश्वत्कल्याणमाचरेत् ॥ ३४ ॥
मृगतृष्णासमं वीक्ष्य संसारं क्षणभङ्गुरम् ।
सज्जनैः संगतं कुर्याद्धर्माय च सुखाय च ॥ ३५ ॥

तन्मम संमतेन तदेव क्रियताम् । यतः

अश्वमेधसहस्राणि सत्यं च तुलया कृतम् ।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥ ३६ ॥

अतः सत्याभिधानदिव्यपुरःसरयोरप्यनयोर्भूपालयोः काञ्चनाभिधान-संधिर्विधीयताम् । सर्वज्ञो ब्रूते—एवमस्तु । ततो राजहंसेन राज्ञा वस्त्रा-लंकारोपहारैः स मन्त्री दूरदर्शी पूजितः प्रहृष्टमनाश्चक्रवाकं गृहीत्वा राज्ञो मयूरस्य संनिधानं गतः। तत्र चित्रवर्णेन राज्ञा सर्वज्ञो गृध्रवचनाद्बहुमान-दानपुरःसरं संभाषितस्तथाविधं संधिं स्वीकृत्य राजहंससमीपं प्रस्थापितः । दूरदर्शी ब्रूते—देव सिद्धं नः समीहितम् । इदानीं स्वस्थानमेव विन्ध्या-चलं व्यावर्त्य प्रतिगम्यताम् । अथ सर्वे स्वस्थानं प्राप्य मनोभिलषितं फलमनुभवन्तीति ।

विष्णुशर्मणोक्तम्—अपरं किं कथयामि कथ्यताम् । राजपुत्रा ऊचुः—तव प्रसादाद्राज्यव्यवहाराङ्गं ज्ञातम् । ततः सुखिनो भूता वयम् । विष्णु-शर्मोवाच—यद्यप्येवं तथाप्यपरमपीदमस्तु—

संधिः सर्वमहीभुजां विजयिनामस्तु प्रमोदः सदा
सन्तः सन्तु निरापदः सुकृतिनां कीर्तिश्चिरं वर्धताम् ।
नीतिर्वारविलासिनीव सततं वक्षःस्थले संस्थिता ।
वक्त्रं चुम्बतु मन्त्रिणामहरहर्भूयान्महानुत्सवः ॥ ३७ ॥

अन्यचास्तु ।

प्रालेयाद्रेः सुतायाः प्रणयनिवसतिश्चन्द्रमौलिः स याव-
द्यावल्लक्ष्मीर्मुरारेर्जलद इव तडिन्मानसे विस्फुरन्ती ।
यावत्स्वर्णाचलोऽयं दवदहनसमो यस्य सूर्यः स्फुलिङ्ग-
स्तावन्नारायणेन प्रचरतु रचितः संग्रहोऽयं कथानाम् ॥ ३८ ॥

अपरं च ।

श्रीमान्धवलचन्द्रोऽसौ जीयान्माण्डलिको रिपून् ।
येनायं संग्रहो यत्नाल्लेखयित्वा प्रचारितः ॥ १३९ ॥

## इति हितोपदेशे संधिर्नाम चतुर्थः कथासंग्रहः संपूर्णः ॥

## समाप्तोऽयं हितोपदेशः ।

॥ शुभं भूयात् ॥

---



२ स्वीकृत्य स्वोशिष्टद्वितीयो राजहंससमीपं इति पाठभेदः ।

